श्रीः ॥

श्रीमच्छङ्कराचार्यप्रणीतं

# गोविन्दाष्टकम् ।

आनन्दगिरिकृतसंस्कृतटीकया,
सनाढ्यमहामण्डलमहोपदेशक सिकोहावादनिवासि
पंडितवर कन्हैयालालशर्मविरचित
भाषाटीकया च सहितम्.

गंगाविष्णु श्रीकृष्णदास,
मालिक-" लक्ष्मीवेङ्कटेश्वर " प्रेस,
कल्याण-मुंबई.

संवत् १९८५ शके १८५०



मुद्रक और प्रकाशक–

गंगाविष्णु श्रीकृष्णदास,

मालिक–"लक्ष्मीवेङ्कटेश्वर" स्टीम्–प्रेस, कल्याण–मुंबई.





श्रीः ।

श्रीगणेशगिरिगुरुभ्यो नमः ॥

# अथ गोविन्दाष्टकम् ॥

## संस्कृत-भाषाटीकासहितम् ।



अवतरणिका—इह खलु सकललोकहितावतारो भगवान् महाविष्णुर्भुवा विनयतयार्थितो भूभारपरिजिहीर्षया यदुकुले किलावतीर्णस्सनकादिमुनिजनैरनुदिनमनुगीयमानसच्चरित्रो भगवान् नन्दवेश्मनि विजहार तमेव विहारमष्टभिः श्लोकैः सत्यमित्यादिभिर्वर्णयन् भगवत्पूज्यपादमुनिर्निरस्तसमस्तविशेषसच्चिदानन्दाद्वयपरमात्मानमभिष्टौति—

भाषा—जिसके शुभ चरित्र सनकादि ऋषिसमूहद्वारा प्रतिदिन गाये जाते हैं, जिसके कोई बराबर तथा विशेष नहीं, जो सत्-चित् आनन्द कन्द जगदीश हैं, वही श्रीकृष्णचन्द्र यहाँ जीवधारियोंके निश्चयात्मक कल्याण निमित्त, एवं पृथ्वीकी सविनय प्रार्थना श्रवण कर उसके भार उतारनेको यादवकुलमें प्रगट हो नन्दजीके मन्दिरमें लीलाविहार करते-

भये, उसी लीलाविहारको श्रीपूज्यपाद शङ्कराचार्य्यजी महाराज ( सत्यं ज्ञानमनन्तम् ) इत्यादि आगामी आठ श्लोकोंसे कहतेहुये श्रीकृष्णपरमात्माकी स्तुति करतेहैं—

सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं
गोष्ठप्राङ्गणरिङ्गणलोलमनायासं परमायासम् ।
मायाकल्पितनानाकारमनाकारं भुवनाकारं
क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ १ ॥

सं०—सत्यमिति । परमश्चासावानन्दश्चेति परमानन्दस्तं निरतिशयानन्दं गोभिर्गीर्भिस्तत्त्वमस्यादिवाक्यैर्विद्यते उपलभ्यते इति गोविन्दस्तं प्रणमत प्रकर्षेण भक्तिश्रद्धातिशयेन नमत वाङ्मनःकायैरर्च्चयत। अर्चनायां किं फलमित्याकांक्षायांपरमेश्वरप्रसादेनसत्यज्ञानादिलक्षणया परमार्थप्राप्तिरेव मुख्यफलमित्याभिप्रेत्य विशिनष्टि सत्यमित्यादिना । सत्यमबाध्यं ज्ञानान्तरेण विषयासत्त्वप्रतीतिर्बाधः तद्योग्यत्वं शुक्तिकादावारोपितापुरजतादेः विवेकज्ञानेन तथा बाध्यत्वमस्याकल्पितत्वात् रूपान्तर-

प्राप्त्यभावाच्च । नन्वस्य सत्यत्वे प्रमाणमस्ति नवा अस्ति चेत् तद्विषयत्वेन घटादिवद्विषयत्वमापद्येत चेत् कथं सत्यत्वासिद्धिरित्याशङ्क्य परमात्मनः स्वयंप्रकाशत्वात् ज्ञानत्वाच्चानन्तम् अन्तः सीमा इयत्ता न विद्यते यस्य सोऽनन्तस्तं देशतः कालतः वस्तुतः न परिच्छिद्यते "यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति परमात्मनः सर्वगतत्वावगमात् न च कालतः परिच्छिद्यते 'न जायते म्रियते वा कदाचित्' इत्यात्मनो जन्मविनाशप्रतिषेधः नापि वस्तुतः परिच्छिद्यते अस्य निखिलोपादानत्वेन स्वव्यतिरिक्तवस्त्वन्तराभावात् 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायात् तस्मादनादि अविद्याकल्पितस्य निखिलद्वैतस्य रज्जुसर्पादिवत् दृश्यत्वेनाधिष्ठानमात्रारब्धत्वात् अतएव नित्यमविनाशिनं "नित्यं विभुम्" इति श्रुतेः "अविनाशि तु तद्विद्धि" इति स्मृतेश्च सर्वदा विद्यमानमित्यर्थः ।

स्या

ननु नित्यमाकाशादेस्तावदात्मनः सकाशादुत्पत्तिश्रव-णादनित्यत्वादेवं नित्यस्यात्मनोऽनित्यत्वं स्यादित्या-शङ्क्य तस्य चाकाशविलक्षणत्वे जन्माद्यभावान्नित्यत्वं सुस्थितमित्याशयेनाह-अनाकाशमिति. "अन्यतमो-वाद्यनाकाशम्" इतिश्रुतेः। आकाशाद्व्यतिरिक्तस्तत्स-ङ्गरहितत्वाच्चेत्यर्थः। जन्माद्यभावविलक्षणत्वादेव परमा-काशम् आ समन्तात् काशते इत्याकाशः परमश्चासावा-काशश्चेति परमाकाशस्तं परमाकाशमित्यर्थः। येन सूर्य-स्तपति तेजसेद्धः "तमेव भान्तमनुभाति सर्वम्" इति श्रुतेः "ज्योतिषामपि तज्ज्योतिः"इति स्मृतेश्च।अत एव तदाभिष्टुत्वपदतयाऽभिष्टौति गोष्ठप्राङ्गणेति। गावः श्रोत्रा-दीनीन्द्रियाणि तिष्ठन्त्यस्मिन्निति गोष्ठश्चिदधिष्ठितोऽ-हङ्कारः स एवास्य प्राङ्गणमभिव्यक्तिस्थानं नृत्यरङ्गो वात्र रिङ्गणं खेलनं कार्यकारणसंघातप्रेरकत्वम् अत एव लोलम् "य आत्मनि तिष्ठन्नात्मानमन्तरोयमयति" इति श्रुतेः 'ईश्वरःसर्वभूतानाम्' इति भगवद्वचनाच्च कार्य-

कारणसंघातप्रेरकत्वेन लोलमित्यर्थः। तर्हि प्रेरकत्वेनाऽऽयासयुक्तमित्याशङ्क्याह-अनायासमिति। अयस्कान्तवत् संनिधिमात्रेण प्रेरकत्वेनानायासमायासरहितमित्यर्थः। तथा बुद्धिधर्माध्यासेन परमायासं परमोऽत्यन्तायासः कर्तृत्वभोक्तृत्वलक्षणो यस्य परमायासस्तम् 'श्रोत्रं चक्षुः स्पर्शनं च' इति भगवद्वचनात् संसारदुःखादिविषयमित्यर्थः। ननु एकस्मिन्नेव कथं द्वयं घटेत इत्याकांक्षायामस्य मायामयत्वान्नायं दोष इत्याशयेनाह मायाकल्पितमिति । अघटितघटनापटीयसी माया तया कल्पितं नानाकारं शरीरभोगायतनं यस्य स तथोक्तस्तम् शरीरादेर्मायानिबन्धत्वात्तन्निबन्धनः स आयासोऽपि तथाविध इत्यर्थः। ननु नानाकारश्चेत्कथं निरूपे निर्गुणेऽप्यखण्डिते मयि चिति विकल्पनाऽतिशून्ये स्वपतिजगदीशजीवभेदघटनघटापटीयसी माया इत्यादिवचनसंगतिरित्यत आह-अनाकारं शरीरभोगराहित्यश्रवणान्नित्यमुक्तमित्यर्थः । नन्वनाकारश्चेत्कथं 'ब्रह्माद्याः

स्थावरान्ताः प्राणिनो मम स्युः' स्मृतौ इति वेदान्त-वाक्यं संगच्छत इत्यत आह-भुवनाकारं भुवनं मायामय-माब्रह्मस्तंबपर्य्यन्तमाकारो यस्य स तथोक्तस्तं तथोक्तं हरिमीडे सर्वत्रास्ते सर्वशरीरीति भगवत्पादवचनादपी-त्यर्थः । ननु 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतेश्च । क्ष्मामानाथं क्ष्मा भूमिर्मा लक्ष्मीः तयोर्नाथं स्वयमनाथं स्वतंत्रमेव प्रपंचयति परमिति 'आनन्दं ब्रह्म' 'अयमात्मा ब्रह्म' इति श्रुतेः परमानन्दमुपमानरहित-मानन्दरूपं गोविन्दं प्रणमत इत्यर्थः ॥ १ ॥

भाषाटीका—जो ( परमानन्दं ) सर्वोपरि आनन्दयुक्त है ( गोविन्दं ) जो तत्त्वमसि आदि वेदवाक्योंसे जानाजाताहै ( प्रणमत ) उसको (भक्तियुक्तः) श्रद्धापूर्वक मन वाणी कर्मसे नमस्कार पूजन करो।यदि कहो कि—उसके पूजनादिसे हमको क्या लाभ है तो उत्तर यह है कि, पर-मेश्वरकी कृपासे सत्य ज्ञान आदि पदार्थोंके यथावत् ज्ञान होनेसे मोक्ष-प्राप्ति ही फलहै इस अभिप्रायसे ईश्वरके सत्यज्ञानादि विशेषण कहतेहैं कि, वह ( सत्यं ) भूत, भविष्य, वर्तमान तीनों कालोंमें सच्चा है झूठा कभी नहीं. जैसे—सीपमें दूरसे चांदी माळूम होतीहै परन्तु समीप आनेसे चाँदी नहीं रहती इस प्रकार ईश्वरमें बाधभ्रम सन्देह नहीं है वह त्रिका-

लमें एकसाही है । अथवा यह कहो कि, ईश्वरके सत्य होनेमें क्या प्रमाण और यदि प्रमाण प्रत्यक्ष-अनुमान-आप्तवचनादिहैं तो घट पट आदिकी भांति वह भी विषय 'हुआ फिर सच्चा' कैसा ? इसपर समाधान करतेहैं कि, वह ( ज्ञानं ) स्वयंप्रकाश अर्थात् अखंड ज्ञानयुक्तहैं इसीसे वह ( अनन्तं ) अनन्तहै जिसकी सीमा नहीं अर्थात् जैसे देशकी मर्यादा कोशोंसे और काल समयकी घडीआदिसे वस्तुकी तोल आदिसे इस प्रकार देश, काल, वस्तुसदृश ईश्वरका अन्त नहीं हैं ऐसाही शास्त्रकारोंनेभी कहाहै कि, जो कुछ संसारमें देखा, सुना, भीतर, बाहर है वह सब नारायणही व्याप रहाहै और वह ( नित्यं ) नित्यहैं जैसे घडा मकानआदिकी मिट्टी उपादान कारणहै अर्थात् जबतक घडा नहीं बनाथा तबतक पहिले मिट्टीथी, और जब घडा बनगया तबभी उसमें मिट्टीहै और जब घडा फूटगया तबभी मिट्टी बनी रही इसी भांति इस संसारके उत्पत्ति, स्थिति, प्रलय अर्थात् आदि मध्य अन्त तीनों समय उपादानकारणरूपसे रहता हुआ स्वयं नित्यहै । इसपर यदि शंका करो कि, आकाशादिकोंकोभी नैयायिकोंने नित्य कहाहै । परन्तु उस ईश्वरसे आकाश उत्पन्न हुआ इस श्रुतिप्रमाणसे आकाश अनित्यभी पायाजाताहै इसी रीतिपर ईश्वरभी हो इसपर समाधान करतेहैं कि, वह ( अनाकाशं ) आकाशादि विषयोंसे भिन्न जन्ममरणादिक्लेशोंसे अयुक्त नित्यहीहै और वह ( परमाकाशं ) अतिशय प्रकाशवान् है ऐसाही श्रुतिमेंभी कहाहै कि, जिसके तेजमें सूर्य प्रकाशितहै जिसके प्रकाशमें सर्व प्रकाशितहैं

और इसीकी पुष्टि स्मृतिनेभी कीहै कि, वह सर्वप्रकाशकोंकाभी प्रकाशक है और वह ( गोष्ठप्राङ्गणरिङ्गणलोलं ) श्रोत्रआदि इन्द्रियोंका स्थानभूत जो अहंकार तद्रूपी आंगनमें प्रेरणा द्वारा खेलताहुआ चंचलितहै । इसीको श्रुतभी कहतीहै कि, जो प्रत्येक इन्द्रियोंमें रहताहुआ इन्द्रियोंसे नही जानाजाता वह ईश्वरहै और श्रीकृष्णचंद्र भगवान्नेभी अर्जुनसे गीतामें कहाहै कि, समस्त जीवोंके हृदयमें निवास कर सबको चक्रके समान घुमारहाहै, अथवा व्रजकी गोशालाओंके आँगनोंमें गौ वत्सोंके पीछे दौडनेमें चंचलहै, यहां यदि शंका करो कि, सर्वप्रेरक होनेसे ईश्वरमें कुछ श्रमभी होताहोगा, तहां समाधान करतेहैं कि, वह ( अनायासं ) परिश्रम रहितहै जैसे चुम्बक पत्थरके समीप आनेसे लोहेकी सुई हिलनेलगतीहै तो क्या चुम्बकको कुछ श्रम होताहै कुछ नहीं इसीप्रकार प्रेरक होनेपरभी ईश्वर श्रमरहितहै और वह ( परमायासं ) मन, बुद्धि, चित्त अहंकारके द्वारा कर्त्ता, भोक्ता, सुखी, दुःखी होनेसे अत्यन्त श्रमयुक्तहै, इसपर यदि शंका करो कि, एक ईश्वरमें श्रमरहित तथा श्रमयुक्त दोनों कैसे घटसकतेहैं? इसपर समाधान यहहै-कि, ( मायाकल्पितनानाकारं ) जो बात नहींहै उसको सिद्ध करनेवाली मायाके योगसे मानेगयेहैं बहुत आकार जिसके । अर्थात् शरीरादिकोंमें मायासम्बन्धसे उसका बन्धनहै सो मायाही जब असत्यहै तो फिर उसको श्रमयुक्त कहना कल्पनामात्रहै इस कारण वह शुद्ध, बुद्ध मुक्त है और वह ( अनाकारं ) शरीरके भोगआदि सुख दुःखोंसे रहित होनेके कारण आकार-

रहितहै अर्थात् आकारवानोंके सदृश शरीरजनित क्लेशोंसे रहितहै । इसपर यदि यह शंका करो कि, जो ईश्वर निराकारही है तो फिर ब्रह्माको लेकर स्थावर जंगम जो कुछ देखने सुननेमें आताहै वह सब ईश्वरही है यह वेदान्त वाक्यकी सार्थकता कैसे होगी ? इसपर कहतेहैं कि, ( भुवनाकारं ) ब्रह्मलोकसे लेकर पातालपर्य्यन्त समस्त आकार उसीका है इसीको ( हरिमीडे ) स्तोत्रमेंभी प्रतिपादन कियाहै कि, ईश्वर सबमें रहताहै और सर्वशरीर उसीके हैं और वह ( क्ष्मामानाथं ) पृथ्वी तथा लक्ष्मीका स्वामीहै और स्वयं ( अनाथं ) स्वतंत्रहै ऐसे परमानन्दस्वरूप गोविन्दको पूर्णभक्तिसे नमस्कार करो ॥ १ ॥

**अवतरणिका—ननु " मातृमान् पितृमान् आचार्यवान् पुरुषो वेद " इत्यादिश्रुत्या सर्वेषां शिक्षामूलकमेव ज्ञानं प्रतिपादितं परन्तु तस्याऽशिक्षत्वं दर्शयति मृत्सेत्यादिना--**

भाषा—यदि यह शंका हो कि, माता, पिता, आचार्य आदिक उपदेशद्वारा मनुष्योंको ज्ञान होताहै इसीप्रकार ईश्वरकाभी क्या कोई शिक्षक है ? इसका समाधान करतेहुए ईश्वरको किसीकीभी शिक्षा नहीं है इस बातको ( मृत्सामत्सि ) इस आगेके श्लोकसे निवेदन करतेहैं—

**मृत्सामत्सीहेति यशोदाताडनशैशवसंत्रासं व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोका-**

लिम् । लोकत्रयपुरमूलस्तंभं लोकालोकमनालोकं लोकेशंपरमेशं प्रणमत गोविन्दं परमानन्दम् ॥ २ ॥

सं०—मृत्सामत्सीति । हेकृष्ण ! ( इह ) अस्मिन् मन्दिरे क्षीरादिभोगाढ्ये ( मृत्सां ) मृत्तिकां किम् ( अत्सि ) भक्षयसि यशोदाकर्तृ ताडनं यशोदाताडनं तस्मिन् समये शैशवः शिशुत्वसम्बन्धी संशयो भीति-र्यस्य स तथोक्तस्तं बालवद्भीतमित्यर्थः । मृद्भक्षणापराध-परिहारत्वेन मात्रे विश्वरूपं दर्शितवानित्याह व्यादितव-क्त्रालोकितेति । व्यादितं प्रसारितं यद्वक्त्रं तस्मिन्नालो-किता दर्शिता लोकालोकचतुर्दशलोकालिः पंक्तिर्येन स तथोक्तः लोकान्त इति लोकाः भूर्लोकादयः सप्त न लोक्या अस्माभिरित्यलोकास्तेऽतलवितलादयः सप्त एवं चतुर्दश लोकास्तेषाम् आलिश्चेति विग्रहः । किंच लोकत्रयपुरमूलस्तम्भं लोकानां भुवनानां त्रयं लोकत्रयं तदेव पुरं तस्य मूलस्तम्भं स्थितिहेतुमित्यर्थः । ' यदा-दित्य गतं तेजः ' इत्यादि भगवद्वचनात् लोकालोकं

लोकः आब्रह्मस्तम्बपर्यन्तम् आलोक्यते प्रकाश्यते येन स लोकालोकस्तं स्वयमनालोकः आलोकान्तररहितः अन्यथा अनवस्था प्रसज्ज्यते "भीषास्माद्वातः पवते" इतिश्रुतेः । लोकानां वाय्वादीनाम् ईशं प्रेरकम् । "वातादयो महावीर्याः स्वतंत्रा वीर्यशालिनः । तेऽपि भीताः प्रवर्त्तन्ते ब्रह्मणोऽपि भयं मतम्" इति देवेश्वरवचनात् । किञ्च परमेश ब्रह्मादीनामपि प्रेरकं सर्वज्ञं सर्वेश्वरं प्रणमत नमस्कुरुत इत्यर्थः ॥ २ ॥

भाषा—हे कृष्ण ! (इह) इस दूध दही मक्खनआदि समस्त भोज्ययुक्त घरमें (मृत्सां) मिट्टीको (किं) क्यों (अत्सि) खातेहो (इति) इस प्रकार (यशोदाताडनशैशवसंत्रासं) यशोदा मैयाकी कीहुई ताड़नासे बालकोंके समान भययुक्त है, यहांपर यदि शंका करो कि, ईश्वर भययुक्त कैसे ? इसपर दूसरा विशेषण कहते हैं कि, (व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम्) जिस समय यशोदाको मुख खोलकर दिखाया है अतलआदि नीचेके सात लोक और भूआदि सात लोक ऊपरके इत्यादि चौदह लोकोंकी अनेक गणना अपने मुखमें दिखाईहै जिसने. और (लोकत्रयपुरमूलस्तम्भम्) पृथ्वी, आकाश, पाताल आदि इन तीनों लोकोंरूपी पुरके मूलस्तम्भ अर्थात् आधारस्थान है ।

और ( लोकाऽऽलोकम् ) आब्रह्मस्तम्बपर्य्यन्त समस्त जगत् जिसकरके प्रकाशित कियागया है और स्वयं ( अनालोकम् ) दूसरे प्रकाशसे प्रकाशित नहीं हैं और ( लोकेशं ) वायुलोकआदि समस्त लोकोंके प्रेरकहैं तथा ( परमेशम् ) ब्रह्माआदिकेभी नियन्ता ऐसे ( परमानन्दम् ) परमानन्दस्वरूप ( गोविन्दम् ) गोविन्दको ( प्रणमत ) मन वाणी, कर्मसे नमस्कार करो ॥ २ ॥

त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं कैवल्यं नवनीताहारमनाहारं भुवनाहारम् ।
वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥ ३ ॥

सं०—त्रैविष्टपेति । त्रिविष्टपे वसन्ति ये त्रैविष्टपाः देवास्तेषां रिपवः शत्रवो दानवास्तेषु ये वीराः शूरास्तान् रावणादीन् हन्ति हिनस्तीति वा तं त्रैविष्टपरिपुवीरघ्नम्। क्षितिभारं हरतीति क्षितिभारघ्नं नन्वेतावता कथं निश्शेषार्थनिवृत्तिर्लोकस्येत्यतेतदाह-भवरोगघ्नं संसारवैद्यमित्यर्थः। तत्र हेतुमाह-कैवल्यमिति । गुरूपसत्तिपुरस्सरमहावाक्यश्रवणमनननिदिध्यासनेन ज्ञाते ज्ञाने तत्कार्यनिवृत्तौ निरतिशयानन्दावाप्तिकैवल्यप्रदमित्यर्थः ।

'भूतात्मा परमात्मा च' इत्यादिवचनाच्च । असावध्यध्यारोपवशादेव । नवनीताहारं नवेन नूतनेन शरीरेण नीतं प्रापितं विषयजातमाहारो यस्य स नवनीताहारस्तम् अविद्यावस्थायां विषयभोक्तारमित्यर्थः "तयोरेकः पिप्पलं स्वाद्वत्ति" इति श्रुतेः । भुवनाहारं भुवनं नामरूपात्मकं जगत् अस्याहारं चिन्मात्रावशेषं स तथोक्तः। तर्हि कीदृग्विधः केन प्रकारेण कुत उपलब्धुं शक्यते इत्याकांक्षायां निष्कल्मषबुद्धौ श्रुत्वाचार्यप्रसादेनेत्याह । वैमल्यस्फुटचेतोवृत्तिविशेषाभासम् । वैमल्येन रागादिराहित्येन स्फुटा व्यक्ता बोधे या चेतोवृत्तिस्तस्यां विशेषेणापरोक्षतया आभासो यस्य तम् । तर्हि बुद्धिग्राह्यत्वेन जडत्वप्रसंग इत्यत आह अनाभासमिति । "यस्यामतं तस्य मतम्" इत्यादिश्रुतेरदृश्यत्वं निश्चयाद्विषयतया न आभासो भानं विद्यते यस्य सोऽनाभासः । "न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मः" इत्यादिश्रुतेश्चक्षुरादीनामगोचरत्वात् स्वतः स्फुरतीत्यर्थः ।

अतएव शैवं स्वार्थे तद्धितविधानात् शैवं कल्याणरूपमित्यर्थः । तत्र हेतुः केवलं शान्तं "साक्षी चेता केवलो निर्गुणश्च" इति श्रुतेः । केवलचिन्मात्रावशेषतया शान्तसंसारभूमिमित्यर्थः । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केनकम्" इति श्रुतेः । मुक्तावस्थायां दर्शनक्रियाशून्यत्वात् केवलचिद्रूपमिति भावः । एवं पूर्वविशेषणविशिष्टं परमानंदस्वरूपं गोविन्दं प्रणमतेत्यर्थः ३ ॥

भा० टी०—( त्रैविष्टपरिपुवीरघ्नं ) स्वर्गनिवासी देवताओंके शत्रुओंमें जो वीर हिरण्यकशिपु रावणआदि उनके नाश करनेवाले ( क्षितिभारघ्नं ) पृथ्वीके भार उतारनेवाले तथा ( भवरोगघ्नं ) संसारके जो जन्म, मरण आदि क्लेशरूपी रोग उनके नाश करनेवाले ( कैवल्यं ) मोक्षरूप एवं (नवनीताहारं ) नवीन नवीन प्राप्तहुएहैं सांसारिक सम त आहार जिसको अथवा यशोदाआदि ब्रजगोपियोंसे नवनीत मक्खनको भोजन करनेवाले (अनाहारम्) आहारादि भोक्तव्य श्रोतव्यादि विषयोंसे रहित तथा ( भुवनाहारं ) समस्त संसारमात्रहै आहार जिसका अर्थात् प्रलयकालमें समस्त लोकालोक जिसमें लीन होजाते हैं एवं ( वैमल्यश्रुतिचेतोवृत्तिविशेषाभासं ) निर्मल शुद्धब्रह्म प्रतिपादक श्रुतिविचारजन्य चित्तवृत्तिद्वारा आभास ज्ञानहोताहै जिसका अन्यथा (अनाभासं) अविद्याग्रसित मलिन दुर्बुद्धियोंको जिसका भान, प्रकाश नहीं होता ऐसे

( शैवं ) कल्याणस्वरूप ( केवलशान्तं ) निरन्तरशान्तिरूप (गोविन्दं) इन्द्रियप्रेरक ( परमानन्दं ) अखण्डानन्द ईश्वरको ( प्रणमत ) मन वाणी कर्मसे प्रणाम करो ॥ ३ ॥

गोपालं प्रभुलीलाविग्रहगोपालं कुलगोपालं
गोपीखेलनगोवर्द्धनधृतलीलालालितगोपालम् ।
गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं
गोधीगोचरदूरं प्रणमत गोविन्दंपरमानन्दम् ॥ ४ ॥

सं०—ननु कैवल्यचिद्रूपत्वे कथं भक्तानुग्राहकत्वमिति चेन्नैवम् अस्याप्यचिन्त्यशक्तिमत्त्वेन स्वेच्छाविहारलोकलीलानिदर्शनाय गोपालमित्याह—गोपालमिति । गोपवेषेण गाः पशून्पालयतीति गोपालस्तम् । प्रभुलीलागोपालमिति । प्रभुः कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात् प्रभुस्तस्मादेव लीलया स्वेच्छाशक्त्या परिगृहीतो विग्रहो देहस्तेन गां वेदं तन्मूलं यज्ञादिकं पालयतीति स तथोक्तस्तम् । कुलगोपालमिति—कौ भूमौ लीयत इति कुलं शरीरं तच्च गाश्चेन्द्रियाणि च पालयतीति कुलगोपालस्तं सुषुप्तिमूर्च्छादौ मृत इति भ्रान्तिपरिहाराय

भ्राणेन सह शरीरादिरक्षक इत्यर्थः । गोपीखेलनेति—गोपीभिः सह विहरणं तदर्थं वनं प्राप्त वृष्टिसान्निवारणाय गोवर्द्धनगिरिधृतिरकारि सैव लीला तस्या अयत्नसाध्यत्वात्तया लीलया लालिताः पालिताः गोपाला येन सः तथोक्तस्तम् । "अस्याजानतो विद्धि चक्रनम(ह)स्ते विष्णो सुमतिं भजामहे" इत्यादिभिः गोभिर्वेदैर्निगदितं गोविन्देति स्फुटं प्रसिद्धं नाम यस्य स तथोक्तस्तम् । बहुनामानमिति बहून्यसंख्यातानि,नामानि यस्य तम् 'सर्वाण्येतानि नामानि परस्य ब्रह्मणो हरेः' इति पुराणवचनादसंख्यातनामानमित्यर्थः । तर्हि नामरूपसम्बन्धादसङ्गत्वहानिरित्यत्राह-गोधीगोचरदूरमिति । "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । गोऽगोचरात् वाच्यगोचराच्च दूरे निर्गुणे निष्कले परमानन्दरूपे ब्रह्मणि प्रवृत्तिनिमित्तानाम् जातिगुणक्रियादीनाम् असंभवाद्वाङ्मनसाऽगम्यमित्यर्थः ॥ ४ ॥

भा० टी०—यदि यह शंका करो कि, ईश्वर केवल चैतन्यरूप होनेसे भक्तोंपर कैसे कृपा करसकता है ? उत्तर यह है कि, उसकी

अचिन्त्य शक्ति होनेसे निज इच्छापूर्वक लोकलीलाविहारद्वारा भक्तोंकी रक्षा करताहै । इसीपर आगामी श्लोकहै, ( गोपालं ) गौओंके पालनेवाले ( प्रभुलीलाविग्रहगोपालं ) सर्वसामर्थ्यवान् होनेसे लीलार्थ जो धारण किया शरीर उससे वेद, तथा वेदविहित यज्ञादि कर्मके पालने वाले। ( कुलगोपालं ) शरीर, प्राण, इन्द्रियआदिके रक्षक ( गोपीखेलनगोवर्द्धनधृतलीलालालितगोपालं ) गोपियोंके साथ खेल करनेको गोवर्द्धनधारकर गोपालोंपर लाड अर्थात् प्यार करनेवाले ( गोभिर्निगदितगोविन्दस्फुटनामानं ) वेदवाणियोंसे पुकारागया है स्पष्ट गोविन्द नाम जिनका ( बहुनामानं ) अनेकशः नामवाले ( गोधीगोचरदूरं ) वाणी बुद्धि इन्द्रिय आदिसे दूर ऐसे ( गोविन्दं ) इन्द्रियोंके प्रेरक ( परमानन्दं ) अखण्डानन्द ईश्वरको ( प्रणमत ) नमस्कार करो ॥४॥

**अवतरणिका—ननु वाङ्मनसोऽगम्यत्वे ' तं त्वौपनिषदं पुरुषं पृच्छामि' इत्युपनिषद्वेद्यत्वं न घटत इत्याशङ्क्य आत्मन्यविद्याध्यारोपिततद्धर्मनिरसनमुखेन कथंचित् प्रतिपादकाऽभिप्रायेण तथोक्तमित्याशयेनाह—**

भाषा—यहां यह शंका करतेहैं कि, जब पूर्वश्लोकमें मन वाणी कर्मसे दूर परमात्माको प्रतिपादन किया है तो फिर उस उपनिषत्प्रतिपाद्य पुरुषको पूछताहूं, इत्यादि उपनिषद्वाक्यमें किसप्रकार घट सकतेहैं, इसका समाधान यह है कि, आत्मामें अविद्याका अध्यारोप कर प्रत्येक धर्मक सुखपूर्वक कथन है इसी अभिप्रायसे यह श्लोक गोपीमंडलआदिकहते हैं

गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभंशश्वद्गोखुरनिर्धूतोद्धतधूलीधूसरसौभाग्यम्।श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावंचिन्तामणिमणिमानं प्रणमत गोविन्दं परमानन्दम् ॥ ६ ॥

सं०—गोपीति। गोपीनां मण्डलं समूहस्तेन सह गोष्ठीभेदः क्रीडाविशेषो यस्य स तथोक्तं रासक्रीडार्थमित्यर्थः। अतएव भेदावस्थं भेदेनाऽवतिष्ठत इति भेदावस्थस्तं"रूपं रूपंप्रतिरूपो बभूव " इति अनेकोपाधिवशादनेकरूपमित्यर्थः।स्वतस्त्वभेदाभम् अभेदेना भानं यस्य स तथोक्तस्तम्। शश्वदनवरतं गवां खुरेण निर्द्धूता नितरां कंपिता उद्धृता च या धूली रजःपटालिका तया धूसरमीषत्पाण्डुरं तदेव सौभाग्यं रूपलावण्यं यस्य स तथोक्तस्तम् । श्रद्धेति "अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । भक्त्या मामभिजानाति " इत्युपनिषत्स्मृतिवचनात् श्रद्धाभक्तिभ्यां कैश्चिद्गृहीतानन्दं मुक्तानां निर्वाणसुखमित्यर्थः। तर्हि तद्गृह्यत्वेन जडत्वप्राप्तिरित्याशंक्याह-अचिन्त्यं मन-

सोऽप्यविषयमित्यर्थः । "अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते" इति भगवद्वचनात् । अयं त्वविषयश्च नास्त्येवं शशविषाणवदित्यत आह-चिन्तितसद्भावमिति । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति को ह्येवान्यात्कः प्राण्यात् यदेष आनन्दो न स्यात् एष ह्येवानन्दयाति" इत्यादिश्रुत्या चिन्तितो निश्चितः सद्भावः सत्ता यस्य स तथोक्तस्तम् । चिन्तितसद्भावादेव चिन्तामणिं चिन्तामणिर्यथाचिन्तितं तद्ददाति तद्वदयमपि चिन्तामणिः 'आयुरारोग्यमर्थांश्च भोगांश्चैवानुषंगिकान् । ददाति ध्यायतां चिन्त्यं सर्वकामप्रदो हरिः ॥' इतिवचनाद्वांछितप्रदमित्यर्थः। "अणोरणीयान्" इति श्रुतेः । अणिमानं सूक्ष्मम् अप्रतर्क्यमित्यर्थः ॥ ५ ॥

भा० टी०—( गोपीमंडलगोष्ठीभेदं ( गोपियोंके समूहके साथ है क्रीडाविशेष जिसका अतएव ( भेदावस्थं ) गोप गोपी गौ वत्सादि अनेक भेदोंमें जो स्थित है और वास्तवमें ( अभेदाभं ) अभेदान्वयसे सर्वत्र एकरस प्रकाशमान है, तथा ( शश्वद्गोखुर-

निर्धूतोद्धूतधूलींधूसरसौभाग्यम् ) निरन्तर गौओंके खुरोंसे उठी एवं उडीहुई धूलीकरिके सुशोभित अंग जिनका और (श्रद्धाभक्तिगृहीतानन्दं) श्रद्धा भक्तिद्वारा ग्रहण होता है आनन्दमयस्वरूप जिसका अन्यथा ( अचिन्त्यं ) मनसे भी ग्रहण नहीं होसकते तथा ( चिन्तितसद्भावं ) वेदमंत्रोंद्वारा जानीगई है जनकता जिसमें और ( चिन्तामणिं ) चिंतामणिके समान भक्तोंके मनचिंते कार्योंको साधनेवाले तथा ( अणिमानं ) अणुरूपमें व्याप्तहोनेवाले ( गोविन्दं ) इन्द्रियप्रेरक ( परमानन्दं ) अखंडानन्द जगदीश्वरको ( प्रणमत ) मन वाणी कर्मसे प्रणाम करो ॥ ५ ॥

अवतरणिका-" जक्षन् क्रीडन् रममाणः स्त्रीभि र्यानैर्वा " इति श्रुतेरस्य जीवन्मुक्तवल्लीलां दर्शयति-

भा०-परमात्मा खाता है खेलता है रमता है स्त्रियोंमें यानोंसे इत्यादि श्रुतिप्रमाणसे इनकी जीवन्मुक्तके समान लीला दिखाते हैं आगेके श्लोककरिके-

**स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं**
**व्यादित्सन्तीरथ दिग्वस्त्रा वस्त्रमुपाकर्षन्तं ताः ।**
**निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तस्थं**
**सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ६**

सं०-स्नानेति । स्नानार्थं जलक्रीडार्थं व्याकुलाः

संभ्रान्ताः याः योषितस्तासां वस्त्राणि उपादाय स्वीकृत्य अगं 'कदम्बवृक्षमधिरूढमच्युतम्' इत्यागमवचनात् । कीदृग्विधमित्यत आह दिग्वस्त्राः दिगंबराः अतएव व्यादित्सन्तीः विशेषेण आदातुमिच्छन्तीस्ताः योषितः उप समीपे आकर्षन्तं स्वनिकटमानयन्तं तर्हि स्त्रीलंपटत्वा-द्यसमसंपूर्णं इत्यत आह निर्द्धूताः नितरां कंपिता द्वयशोकविमोहा येन स तथोक्तः बुद्धं प्रबुद्धम् अप्रबुद्धानां विषयपारवश्यं न तु प्रबुद्धस्येत्यर्थः।"मनसस्तु परा बुद्धिः" इत्यादिना बुद्धेरप्यन्तःस्थं तत्तत्साक्षितया स्थितम् । सत्तामात्रशरीरं "सदेव सौम्य" इत्यादिना सत्तामात्रविग्रहं प्रणमतेत्यन्वयः ॥ ६ ॥

भा०टी०-( स्नानव्याकुलयोषिद्वस्त्रं ) स्नान करनेके लिये आकुलित जो गोपस्त्रियां उनके ( वस्त्रं ) वसन अर्थात् कपडोंको ( उपादाय ) लेकर ( अगं ) कदमके वृक्षपर ( उपारूढं ) बैठेहुए हैं तथा ( दिग्वस्त्राः अथ व्यादित्सन्तीः ) वसनरहित होनेसे वस्त्र ग्रहण करनेकी इच्छा है जिनकी ऐसी गोपियोंको ( उपाकर्षंतं ) समीप बुलारहे हैं और वास्तवमें ( निर्धूतद्वयशोकविमोहं ) निरन्तर तिरस्कृत किये हैं शोक मोह जिनने तथा ( बुद्धं ) पूर्ण ज्ञानवान् है अतएव ( बुद्धेरन्तस्थं ) बुद्धिमें

भी सूक्ष्मरूपसे स्थित एवं ( सत्तामात्रशरीरं ) तीनों कालमें एकरस रहनेवाले ( गोविन्दं परमानन्दं ) गोविन्द परमानंद परमात्माको ( प्रणमत ) नमस्कार करो ॥ ६ ॥

अवतरणिका—परित्राणायेति भगवद्वचनात् लोकरक्षार्थं यदुकुलेऽवतीर्णमतिप्रसन्नपरममङ्गलरूपपरमात्मानं प्रस्तौति—

भा०—साधु महात्माओंकी रक्षार्थ प्रतियुगमें भगवत् अवतार होता है इस भगवद्गीतावाक्यसे संसारकी रक्षाके लिये यादवकुलमें अवतार लेनेवाले अतिप्रसन्न परममंगलरूप परमात्माकी ( कान्तं ) इस आगामी श्लोकसे स्तुति करते हैं—

**कान्तं कारणकारणमादिमनादिं कालघनाभासं कालिन्दीगतकालियशिरसि नृत्यन्तं मुहुर्नृत्यन्तम् । कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ॥ ७ ॥**

सं०—कान्तमिति । " आर्द्रेक्षिचायमवलीकृतपुष्पबाणमारक्तनेत्रमपरैर्धृतशंखचक्रम् । विन्यस्तवेणुमधुरस्वननादयन्तं संमोहयन्तमिव पाशसृणी वहन्तम् ॥" इति

रहस्यागमवचनात् ( कान्तं ) कमनीयमत्यन्तसुन्दरम् । तदेवाह ' कश्चिदाद्यः सुपुरुषः ललितः कृष्णविग्रहः । वंशीनादविनोदेन करोति विवशं जगत् ' किंच ' योयं चकार गगनार्णवरत्नमिन्दुं योऽयं सुरासुरगुरुः पुरुषः पुराणः । यद्वा समग्रामिदमंतकसूदनस्य देवत्वमेव तदिति प्रतिपादयन्ति 'इति त्रिपुरसुन्दरावतारमित्यर्थः।"मायांतु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतेः ( कारणकारणं) जगत्कारणप्रकृतेरपि कारणमधिष्ठानभूतं.तत्राह " ब्रह्म वा इदमग्रआसीत् सदेव सौम्येदमग्र आसीत् आत्मा वाऽरे इदमेवाऽग्र आसीत् तस्माद्वा एतस्मादात्मन आकाशःसंभूतः " इत्यादिश्रुतिभ्यश्च आदिं जगदुपादानं स्वयं च ( अनादिं ) आदिकारणं न विद्यते यस्य सः तथोक्तस्तं स्वतःसिद्धमित्यर्थः ( कालघनाभासम् ) कृष्णमेघवत् श्यामसुन्दरम् (कालिन्दीगतकालियशिरसि) कालिन्दी यमुना तद्गतकालियनागस्य शिरसि मुहुर्मुहुर्नृत्यन्तं 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः' इति भगवद्वचनात् । ( कालं ) काला-

त्मकं संहारकर्त्तारम् । स्वयं तु (कालकलातीतं) कालो भूतभविष्यद्वर्त्तमानलक्षणः। कालस्यांशं निमेषकाष्ठादिप्रभृतयः कलाश्च अतीत्य वर्त्तत इति कालकलातीतस्तम् " अत्यतिष्ठद्दशांगुलम् अतो ज्यायांश्च पूरुषः अन्यत्र धर्मात् अन्यत्राऽधर्मादन्यत्राऽस्मात् कृताऽकृतात् अन्यत्र भूताद्भव्याच्च यत्तत्पश्यति तद्वद अन्यदेव विदितादथो विदितात्" इति श्रुतेः।कार्यकारणसंघरहितमिति भावः। तथापि संसारावस्थायां(कलिताऽशेषं) 'तस्य वाक् तन्ती नामानि दामानि तस्येदं वाचा तन्त्या नामभिर्दामभिस्सर्वंसितम्" इति श्रुतेः। कलिताःबद्धा अशेषा जीवाः येन स तम् । अभक्तानां भयहेतुमित्यर्थः । भक्तानान्तु बंधनिवर्त्तकमित्यत आह (कलिदोषघ्नं) कलेर्दोषाः विहिताकरणप्रतिषिद्धकरणलक्षणास्तान् दोषान् स्मरणमात्रेण हंति नाशयतीति तम्. आम्नाहुः 'कलावत्रापि दोषाढ्ये विषयासक्तमानसः। कृत्वा तु सकलं पापं गोविन्दस्मरणाच्छुचिः ॥ अतिपापप्रसक्तोऽपि ध्यायान्नि-

मिषमच्युतम् । भूयस्तपस्वी भवति पंक्तिपावनपावनः॥ हास्येनापि नमस्कारः प्रयुक्तः शार्ङ्गपाणये । संसारस्थूलबंधेभ्यो विमुक्तो भवति क्षणात्' कलिमलापहामित्यर्थः सूर्यात्मना ( कालत्रयगतिहेतुं ) कालत्रयस्य संध्यात्रयस्य हेतुं प्रणमतेत्यन्वयः ॥ ७ ॥

भा० टी०–( कान्तं ) परमसुन्दर ( कारणकारणं ) जगत्कारण प्रकृतिकेभी अधिष्ठानभूत तथा ( कालिन्दीगतकालियशिरसि नृत्यन्तं मुहुर्नृत्यन्तं ) यमुनाजीमें निवास करनेवाले कालीनागके फणोंपर वारंवार नाचनेवाले एवं ( कालं ) जगत्संहारकर्त्ता और आप ( कालकलातीतं ) भूत, भविष्य, वर्त्तमान लक्षणधारी काल एवं त्रुटि, निमेष, काष्ठाआदि कलाओंको उलंघन कर रहनेवाले अर्थात् कार्यकारणसंघातसे रहित तथा संसारकी अवस्थामें ( कलिताशेषं ) समस्त जीवोंको निज नाम, वाणीरूपी रस्सीमें बांधनेवाले और ( कलिदोषघ्नं ) कलियुगजनित संपूर्ण पापोंको नाशकरनेवाले तथा सूर्यरूपसे ( कालत्रयगतिहेतुं ) प्रातः मध्याह्न सायं त्रिसंध्याओंके कारणभूत ( गोविन्दं परमानन्दं ) गोविन्द परमात्माको ( प्रणमत ) भलेप्रकार प्रणाम करो॥७॥

अवतरणिका– नरनाट्येऽपि अशेषगीर्वाणबाधतया वृन्दावनस्थं गोविन्दं स्तौति–

भाषा—( नरनाटय ) मनुष्य लीलामेंभी समस्त देवताओंके दर्प दलनवाले वृन्दावननिवासी गोविन्द भगवान्को आगामी ( वृन्दवन ० ) श्लोक करके स्तुति करते हैं—

वृन्दावनभुवि वृन्दारकगणवृन्दाराधितवन्द्येहं कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम् । वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ॥ ८ ॥

इति श्रीशङ्कराचार्यप्रणीतं गोविन्दाष्टकस्तोत्रं सम्पूर्णम् ।

सं०—वृन्दावनेति । वृन्दावनभुवि वृन्दारण्यप्रदेशे रासक्रीडायां प्रवृत्तायां वृन्दारकाणां गणाः देवगणाः तेषां वृन्दं समूहस्तेनाराधिता पूजिता वन्द्या श्लाघनीया ईहा क्रीडा यस्य तथोक्तस्तम् ( कुन्दाभामलः ) कुन्दाभा कुन्दवल्लीकुसुमस्येवाभा कान्तिर्यस्य स कुन्दाभः कुन्दाभश्चामलमन्दस्मेरश्चाते कुन्दाभामलमन्दस्मेरः स एव सुधा पीयूषं कुन्दाभामलमन्दस्मेरसुधा तया आविर्भूत आन-

न्दोऽतिशयविशेषो यस्य स तथोक्तस्तम् ( सुहृदानन्दं ) सुहृदां सुष्ठुचित्तानामानन्दं मुक्तानां निर्वाणसुखमित्यर्थः ( वन्द्याशेष- ). वन्द्यास्तेऽशेषाः महामुनयश्चेति वन्द्याऽशेषमहामुनयो नारदाद्यास्तेषां मानसेन हृदयेन वन्द्यं ध्येयमानन्दपूर्वकं पदद्वंद्वं यस्य स तथोक्तस्तम् ( वन्द्याशेषगुणाः ) वन्द्याश्च तेऽशेषगुणाः शान्त्यादयस्तेषामब्धिमाधानस्थानं समस्तगुणाकरमित्यर्थः ( प्रणमत ) इति मध्यमपुरुषबहुवचनं लोकशिक्षार्थम् ॥ ८ ॥

भाषे टी०—( वृन्दावनभुविवृन्दारकगणवृन्दाराधितवन्द्येहम् ) वृन्दावनकी भूमिमें रासक्रीडाके समय देवगणोंके समूहसे पूजन एवं सराहना कीगई है क्रीडा जिसकी तथा ( कुन्दाभामलमन्दस्मेरसुधानन्दं ) कुन्दके पुष्पसदृश विकासमान जो मन्द मुसकानरूपी अमृत ता करिके उदय हुआ है आनन्द जिसका और ( सुहृदानन्दं ) शुद्धहृदयवाले मुक्तजनोंके आनन्द मोक्षसुखरूपी एवं ( वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वंद्वं ) जगद्वन्दनीय—जो नारदादि ऋषिगण उनके हृदयों करके आनन्दपूर्वक ध्यान कियेगये हैं चरणयुगल जिनके तथा ( वन्द्याशेषगुणाब्धिम् ) वन्दनीय समस्त गुणोंके आधारभूत ( गोविन्दं परमानन्दं ) गोविन्द परमात्माको ( प्रणमत ) मन-वाणी-कर्मसे नमस्कार करो ॥ ८ ॥

गोविन्दाष्टकमेतदधीते गोविन्दार्पितसञ्चेता गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघः ॥ गोविन्दाऽच्युत माधव विष्णो गोकुलनायक कृष्णेति नित्यं गायन् यास्यति भक्तो गोविन्दं परमानन्दम् ॥ ९ ॥

अव० सं०—यस्त्वेतत् गोविन्दाष्टकं संगदितं पठति सकामश्चेत् काम्यमानं फलमुपैति निष्कामो मामुपैतीति स्तोत्रपाठकानां फलं कीर्त्तयति—गोविन्देति ॥

इति श्रीआनन्दगिरिकृतगोविन्दाष्टकटीका संपूर्णा ॥

भा० टी—जो इस कहेहुए गोविन्दाष्टकको कामनासहित पाठ करै उसके अभीष्ट सिद्ध होवेंगे और निष्काम पाठ करै तो वह ईश्वरमें लीन होवेगा यही श्लोकसे फलश्रुति कहते हैं—

गोविन्देति ( यः ) जो ( गोविन्दार्पितसंचेताः गोविन्दभगवान्में चित्त लगाकर तथा ( गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघः ) गोविन्दजीके चरणारविन्दका ध्यानरूपीअमृतजलसे धोये हैं समस्त पाप जिसने ऐसा ( भक्त ) सेवक ( गोविंदाच्युत माधव विष्णो गोकुलनायक कृष्णेत्ति ) गोविन्द, अच्युत

माधव, विष्णो, गोकुलनायक, कृष्ण ( इति ) ऐसे ( गायन् ) गाता हुआ ( एतत् ) इस ( गोविन्दाष्टकं ) गोविन्द अष्टकको ( नित्यं ) सदा ( अधीते ) पाठ करैगा वह ( गोविन्दं परमानन्दम् ) परमात्माको ( यास्यति ) प्राप्त होवेगा ॥ ९ ॥

इति श्रीयुत पण्डित कन्हैयालालरचितभाषाटीका समाप्ता ।

इति गोविन्दाष्टकं संपूर्णम् ।



पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" स्टीम् प्रेस,
कल्याण-मुंबई.

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस,
खेतवाडी-मुंबई.